तिरुमलतिरुपतिदेवस्थानम्

# बाल सप्तगिरिः

सचित्रमासपत्रिका
सेप्टेम्बर् २०२०

सप्तगिरि अनुबंधम्



नित्याय निरवद्याय सत्यानन्द चिदात्मने।
सर्वान्तरात्मने श्रीमद्वेङ्कटेशाय मङ्गलम्।।



जगडपु चनुवुल जाजर....
सगिनल मंचपु जाजर....



सम्पुटिः-०१ सञ्चिका-७

सप्तगिरि अनुबन्धः

तिरुमलतिरुपतिदेवस्थानानि

# बालसप्तगिरिः

## सेप्टेम्बर् -२०२०

## विषयसूचिका



मुखचित्रम् - वेङ्कटेश्वरस्वामिनः

अन्तिमरक्षापुटः - अन्नमाचार्यः



# वेङ्कटेश्वरः

- पि.चन्द्रकान्तकुमारः

कृते तु नारसिंहोऽभूत्त्रेतायां रघुनन्दनः।
द्वापरे वासुदेवश्च कलौ वेङ्कटनायकः।।

कलौ वेङ्कटेश्वरः प्रत्यक्षदैवः। श्रीवेङ्कटाचलं वेदकालतः परमपावनक्षेत्रत्वेन प्रख्यातं प्राप्तं दिव्यस्थलं वर्तते। तत्र विराजमानः श्रीनिवासदिव्यमङ्गलविग्रहं दर्शनमात्रेनैव भक्ताः तन्मयत्वं प्राप्नुवन्ति। श्रीवेङ्कटेश्वरः स्वयम्भुवः। वें + कट इत्युक्ते सर्वपापनाशकः इत्यर्थः। 'सर्वपापानि वें प्राहुः कटस्तद्दाहमुच्यते' इति पुराणवचनम्। वेङ्कारः ''अमृतबीजः कट शब्दः ऐश्वर्यवाचकः''। अमृतैश्वर्यकारकः श्रीनिवासः भवति। श्रीनिवासः अर्चामूर्तिस्वरूपः। कलियुगे भक्ताः भक्त्या नामसङ्कीर्तनेनैव संतुष्टो भूत्वा ईप्सितवरं ददाति। वेङ्कटेश्वरः सप्ताचलाधीशः, श्रियः पतिः, अनाथरक्षकः वर्तते। श्रीशैलं, शेषशैलं, गरुडाद्रिः, वेङ्कटाद्रिः, नारायणाद्रिः, वृषाद्रिः, वृषभाद्रिरिति सप्तगिरीणां समाहारः तिरुमलदिव्यक्षेत्रमिति पुराणवचनम्। अखिलाण्डकोटिब्रह्माण्डनायकः वेङ्कटेश्वरः अद्भुतशालग्रामशिलारूपे, स्वयंव्यक्तमूर्तिस्वरूपे आविर्भूय अर्चनां वैखानसागमरीत्या स्वीकरोति। भक्ताः तं कल्पवृक्षमिति, चिन्तामणिरिति, कामधेनुस्वरूपमिति भावयन्तः तं कलियुगवरदं लक्षाधिकभक्ताः प्रतिदिनं दर्शयित्वा आनन्दमनुभवन्ति। वक्षःस्थले लक्ष्म्यास्सह, वाम हस्तं कटिप्रदेशे स्थापयित्वा दक्षिणहस्तेन स्वपादपद्मं दर्शयतः सः आनन्दनिलये तिरुमलक्षेत्रे वैकुण्ठोपरि विरक्तिं प्राप्य भक्तान् अनुग्रहीतुं रमया सह रममाणः वर्तते। पुराणकालतः न केवलं महर्षयः अपि तु बहवः महनीयाः तं पूजयित्वा धन्याः जाताः। तेषु ताल्लपाक अन्नमाचार्यः, तरिगोंडवेंगमाम्बा, मलयालस्वामिः प्रमुखाः आश्रितमन्दारं स्वामिनं बहुधा कीर्तिताः। वेङ्कटाद्रिः श्रीनिवासस्य

क्रीडाचलं वर्तते। वैकुण्ठं प्रति विरक्तिकारकं पर्वतमयमेव। तस्य वैभवम् अवर्णनीयम्। सप्तगिरीणामुपरिविराजमानहेतोः 'एडुकोण्डलवाडु' इति नाम्ना अमृतरूपिणं तं पुनः पुनः प्रार्थयन्ति। ऊर्ध्वपुण्ड्र धारिणं स्वामिनं स्वहृदये प्रतिष्ठाप्य आनन्दबाष्पैस्सह 'वड्डिकासुलवाड! वैकुण्ठवासा! गोविन्द! गोविन्द! इति स्मरन्ति। भगवद्दर्शनानन्तरं भक्तकोटिः प्राकारप्रदक्षिणं कुर्वन्तः विमानवेङ्कटेश्वरं दर्शयित्वा उपयनानि स्वमनोभीष्टतया समर्पयन्ति। स्वामिपुष्करिणी, गोगर्भं, आकाशगङ्गा, पापविनाशनं, कुमारधारा, तुम्बुरुतीर्थमित्यादि पवित्रतीर्थानां निलयः आनन्दनिलयः। अतएव अनेके राजानः स्वामिनं दर्शयित्वा अनेक कैंकर्यैस्सह सेवितवन्तः। लोकरक्षणार्थं अवतरितः वेङ्कटेश्वरः किञ्चित् कालं वल्मीकौ अज्ञाततया स्थित्वा आकाशराजस्य पुत्रिकां पद्मावतीं वृणीय सुवर्णमुखरीतीरे स्थितः अगस्त्याश्रमस्य समीपे (श्रीनिवासमङ्गापुरम्) वसित्वानन्तरं तिरुमलक्षेत्रं गत्वा तत्र तोंडमानुचक्रवर्तिः निर्मितः आनन्दनिलये स्थित्वा भक्तान् स्वकटाक्षैः मोक्षं अनुगृह्णाति। एतदेव वेङ्कटाचलं चर्तुषु युगेषु विविधनामभिः विलसितमिति पुराणवचनम्। कृतयुगे प्रह्लादं अनुग्रहीतुं हिरण्याक्षवधं कृतः स्वामिः तेन पातालं नीतं भूदेवीं श्वेतवराहरूपे उद्धरितवान्। ततः वराहस्वामिः वेङ्काटाचले एव उषितवान्। तदनन्तरं त्रेतायां भगवान् दुष्टशिक्षणार्थं दशरथस्यपुत्रत्वेन आविर्भूय रावणं संहरितवान्। वैकुण्ठवासस्य परिवारं आयुधान्येव भरत लक्ष्मण शत्रुघ्नौ शेषावतारिणः जनिताः। दशरथः, श्रीरामः वेङ्कटाचलं दर्शितवन्तौरिति पुराणवचनम्। द्वापरयुगे श्रीकृष्णः पाण्डवानां वेङ्कटाचलतीर्थानि सेवितुं प्रेषितवानिति पुराणे वर्तते। अतः कृत, त्रेताः द्वापरयुगेष्वपि वेङ्कटाचलः पवित्रतया महिमान्वितक्षेत्रत्वेन विराजितः। कलियुगे जनाः कामक्रोधलोभमोहिताः पापभूयिष्टाः, भवन्तिरिति सृष्टिकर्ता ब्रह्मा ग्रहित्वा मानवान् रक्षितुं मुक्तिदायकं, पापहारकं विष्णुं प्रार्थितवान्। महाविष्णुः ब्रह्मणः समस्तदेवतानां प्रार्थनां अङ्गीकृत्य वेङ्कटपर्वते अर्चावतारस्वरूपे विलसितवान्। मानवकल्याणार्थं वराहप्रान्ते निवासस्थानं कल्पयित्वा वराहमूर्तिदर्शनानन्तरमेव स्वदर्शनमिति वराहमूर्तिं अनुगृहीतवान्। कलौ वेङ्कटेश समो देवः नास्ति। न भविष्यति।

*वेङ्कटाद्रि समं स्थानं ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेश समो देवो न भूतो न भविष्यति ।।*

# भट्टनाथः

- डा. केशवप्रपन्न पाण्डे

गुरुमुखमनधीत्य प्राह वेदानशेषान् नरपतिपरिक्लृप्तं शुल्कमादातुकामः।
श्वशुरममरवन्द्यं रङ्गनाथस्य साक्षाद्विजकुलतिलकं तं विष्णुचित्तं नमामि।।

परमकृपालुः श्रियःपतिः श्रीमन्नारायणः चेतनानाम् उज्जीवनाय जातकरुणया नैकान् उपायान् चिन्तयति। अतः स्वयं बहुभिः स्वीयावतारैः संसारसागरे निमग्नान् जीवान् उद्धर्तुं प्रयत्नं करोति नाम। परम् अन्ततो गत्वा निजप्रयत्ने असफलो भवति। यतोहि अज्ञानिनो जनाः तस्यातिमानुषवैभवैः तं विजातीयं मन्वते।अत एव तस्य अनुष्ठानादिमाध्यमेन उपदिष्टानि सद्वचांसि अपि उपेक्षन्ते। स्वयं गीतायां गीताचार्यो स्वशोकं प्रकटयति यथा--

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितीम्। इति

परं दयैकसिन्धुः भगवान् नारायणः पौनःपुन्येन शब्दादिभोगविषये निरतान् जीवान् सन्मार्गं प्रति आनेतुं प्रयतते। अतः यदा तदा मार्गान्तरमपि आश्रयते नाम। यथा कस्मिंश्चिद् गर्ते पतितः गजः अन्येन सजातीयेन गजेन बहिः अनीयते, तथैव भगवान् संसारगर्ते पतितान् एतान् चेतनान् उद्धारयितुं सजातीयान् नित्यसूरिणः अत्र अवतारयति। ते एव नित्यसूरिणः अत्र शठकोपादिरूपेण दिव्यसूरिण इति प्रसिद्धिं भजन्ते। तेषामेव माध्यमेन च जीवान् मोक्षं प्रति अग्रेसरान् करोति, तेन च स्वयं नितराम् आनन्दितो भवति।



तत्र भगवतः आज्ञां पुरस्कृत्य संसारिणाम् उद्धरणाय अवतीर्णेपु दिव्यसूरिषु ''पेरियाळ्वार्'' इति नाम्ना प्रसिद्धः विष्णुचित्तदिव्यसूरिः श्रीवैष्णवसम्प्रदाये अनितरसाधारणं स्थानं भजते। दिव्यसूरिरयं पाण्ड्यदेशान्तर्गते रम्ये श्रीधन्विपुरे (श्रीविल्लिपुत्तूर् मध्ये) भगवद्वाहनांशेन अवततार। क्रोधनाब्दे, मिथुनराशौ, शुभे स्वातिनक्षत्रे च अवतीर्णः अयं सूरिः स्वजन्मना लोकमिमं धन्यं चकार।

एकदा पाणड्यदेशस्य राजा वल्लभदेवः वेदतत्त्वं परिज्ञातुं एकां पण्डितसभां आयोजयामास। विजेत्रे सशुल्कं बहुमानमपि कल्पयति स्म। तदर्थं

भगवान् वटपत्रशायी विष्णुचित्तसूरिणः स्वप्ने प्रकटितः भवति, राज्ञा आयोजितायां विद्वत्सभायां गन्तुं आज्ञां च ददाति। परन्तु विष्णुचित्तसूरिः स्वस्य शास्त्रेषु अनभिज्ञतां ज्ञापयति। तच्छ्रुत्वा भगवान् तं सर्वशास्त्रज्ञं करोति। तदनु भगवतः आज्ञां शिरोधार्यां कृत्वा प्रसन्नहृदयः स मुनिः शास्त्रचर्चार्थं राजसभां गच्छति। राजसभां प्रति आगतं विष्णुचित्तं राजा सविनयं उपचरति। अत्रान्तरे च तत्र वेदप्रतिपाद्यतां निरूपयितुं शास्त्रचर्चा आरभते। क्रमेण सर्वेषां उपन्यासान् श्रुत्वा अन्तिमे भगवत्कृपाप्रसादलब्धः विष्णुचित्तसूरिः वेदे प्रतिपादितं तत्त्वं एकैकं स्पष्टं निरूपयति। यथा -

**नारायणपरं ब्रह्म तत्त्वं नारायणः परः।**
**नारायण परोज्योतिरात्मा नारायणः परः।**
**स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमः स्वराट्।**

इत्यादिना भगवान् श्रीमन्नारायण एव वेदप्रतिपाद्यः इति सम्यग् निरूपयामास। अहो आश्चर्यं! निरूपणानन्तरमेव नरपतिपरिक्लृप्तं शुल्कं तस्य पुरतः पतति, तद् दृष्ट्वा तत्र उपस्थिताः सर्वेऽपि सभासदः आश्चर्यान्विता भूत्वा तं जातश्रद्धया नमन्ति। राजापि झटति स्वासनादुत्थाय सहर्षं सप्रश्रयं तमभिनन्द्य भूरिपारितोषिकैः सम्मानयति। ततो जनानां पुरतः पुनः सम्मानयितुकामः स राजा वल्लभदेवः तं भक्तशिरोमणिं गजाधिरूढं कृत्वा राजवीथ्यां नगरभ्रमणार्थं नयति, तत्र च **भट्टानाम् अर्थात् वेदान्ततत्त्वज्ञानां विदुषां अयं नाथः** अतः अद्यप्रभृति **भट्टनाथः** इति नाम्ना ख्यातिं भजेद् इत्युक्त्वा तत् **गौरवास्पदं नाम** विदधे। तदा भगवान् नारायणोऽपि स्वभक्तमणिं साक्षात् कटाक्षयितुकामः आकाशे श्रिया सह प्रकटितोऽभवत्। देव्या श्रिया सह समायातं गरुडाधिरूढं भगवन्तं नारायणं विलोक्य स सूरिः आनन्दसागरे निमग्नोऽभवत्। भगवतः निर्हेतुककरुणां स्मारं स्मारं असकृत् प्रणमति च। स्वपुरतो भगवन्तं विद्यमानमपि इतरभक्तवत् स्वस्मै परमपुरुषार्थं मोक्षमपि न प्रार्थयामास। अपि तु तस्मिन् समये आत्मानं मातृवद् विभाव्य स्तौति। हे भगवन्! कलिकलुषेऽस्मिन् लोके मद्विलोकनाय आगतस्य तव को वा अनर्थः समापतेद् इति शङ्कितः **''शतञ्जीव''** इति दिव्यगाथया सपरिकरस्य भगवतो नारायणस्य मङ्गलाशाशनं करोति। तादृशं मङ्गलाशाशनमेव द्वादशगाथापरिमितः **''तिरुप्पळ्ळाण्डु''** नाम्ना प्रसिद्धः दिव्यप्रबन्धोऽभवत्।

भट्टनाथसूरीणाम् अनेन दिव्यवृत्तान्तेन ज्ञायते यत् निस्सवार्थभावनया क्रियमाणं भगवत्कैङ्कर्यमेव अस्माकं स्वरूपं भवति। तेन च भगवन्मुखोल्लास एव जीवानां मुख्यं लक्ष्यं भवेत् इति सारः।

## कर्नाटकहरिदासः

# विजयविठलदासः

- प्रदीपकुमारः

कर्नाटकहरिदासेषु अन्यतमाः श्रीविजयविठलदासाः। एते कर्नाटकराज्ये रायचूरुनगरसमीपस्थ चीकलपर्वि इति ग्रामे जन्म प्रापुः। कूसम्म श्रीनिवासदम्पती एतेषां मातापितरौ। विजयदासानां पूर्वाश्रमस्य नाम दासप्प इति। जनाः एतान् प्रीत्या कूसिमगदासप्प इति आह्वयन्तः आसन्। १६९० तमे वर्षे दासप्पस्य उपनयनसंस्कारः सम्पन्नः। १६९८ तमे दासप्प, अरळम्म इति नाम्नीं उवाह। अनयोः दम्पत्योः शेषगिरि इति पुत्रः अजायत।

कर्नाटकसङ्गीतापितामह इति प्रथितानां पुरन्दरदासानां पुत्रः माध्वपतिः एव जन्मान्तरे विजयदास इति जनितः इति वदन्ति। पुरन्दरदासाः एव काशीनगरे मणिकर्णिका (घाट्) प्रदेशे विजयविठल इति नाम दत्तवन्तः। एते स्वजीवने नैकाः महिमाः प्रदर्शितवन्तः

- स्वपुत्राय स्वकीयं वर्षचतुष्टयं तथा अन्येभ्यः सप्तवर्षाणि यावत् आयुः दत्वा तं पुनरुज्जीवयामासुः



❀हम्पीनगरे पुत्रं हत्वा प्राणत्यागं कर्तुमुद्युक्तां प्रतिरुध्य तं बालं स्वपुत्र इव पालितवन्तः। सः बाल एव कालान्तरे मोहनदास इति प्रसिद्धः।

❀विजयदासाः स्वजीवने त्रिवारं यावत् काशीयात्रां अकुर्वन्। तत्र एकदा नदीप्रवाहे, जलमध्ये पद्मासने उपविष्टाः। जलमध्येऽपि वस्त्राणां आर्द्रताभावेन उपविष्टानां तां दृष्ट्वा जनाः आश्चर्यचकिताः जाताः।

❀विजयविठल इति सङ्केतपुरस्सरं एते २५,००० रचनाः चक्रुः।

❀विजयदासानां कीर्तनेषु नरसिंहसुळादि-दुर्गासुळादि-कपिलसुळादि धन्वन्तरीसुळादि। मुख्यप्राणसुळादि इत्येनानि अत्यन्तं प्रसिद्धानि।

❀विजयदासाः तिरुमलेशस्य दर्शनार्थमागत्य, तत्र दर्शनस्य अलाभे खिन्नमनस्काः ते **तोळसदक्किय तिम्ब किलुबु तळिगेलुम्ब कोळगदलि हणगळन्नु अळेदुकोम्ब इळ्ल कासु एन्दु सुळ्ळुमाताडिदरे एल्लवन्नु कसुकोम्ब कळ्ळदोरेगे जय मङ्गलं नित्यशुभमङ्गलम्** इति स्तोत्रं (निन्दास्तुतिं) चक्रुः।

❀विजयदासानां शिष्येषु जगति हरिकथाऽमृतसारः इति रचनया दाससाहित्यस्य तथा सामान्यजनानां अत्यन्तमुपकृताः जगन्नाथदासाः तथा गोपालदासाः सुब्रह्मण्याचार्यः इत्याद्याः आसन्।

❀विजयदासाः ७९ वर्षाणि सशरीराः आसन्। अनन्तरं आन्ध्रदेशे चिप्पगिरि इति ग्रामे, कार्तीकमासे दशम्यां निर्याणं प्रापुः। अधुनापि कार्तीकमासे तेषां आराधनामहोत्सवः प्रचलति

❀विजयदासानां निर्याणस्थलस्य पुरतः मुख्यप्राणदेवस्य मन्दिरं गोपालदासाः निर्मितवन्तः।

अधुनापि विजयदासाः खगोलरूपेणागत्य मुख्यप्राणस्य सेवां कुर्वन्तीति प्रवदन्ति जनाः

एतादृशमहिमोपेताः विजयदासाः अस्मानपि पुनीयुः इति प्रार्थयामहे।

# तुम्बुरुतीर्थम्

संस्कृतानुवादः- डा.सुजाता मुनुकुट्ल
चित्रम्- पि.शिवप्रसादः
तेलुगु मूलम्
श्रीनिवासादीक्षितुलु




त्वया चिन्तितं वा अचिन्तितं वा तद् असाधुरेव... अकृत्यं च
क्षम्यतां मित्र!
इतः परं कदापि न करिष्यामि।
त्वं क्षमार्हः न। शिक्षा अनुभोक्तव्या एव!
अद्य प्रभृति तव आकाशगमनशक्तिः नश्यति। अधशिरः पृथिव्यां पत... तत्रैव भव। एष एव मम शापः।
देवर्षि! नारद। क्षम्यताम्।
शापवशात् तस्मिन् क्षणे एव पतमानः तुम्बुरः श्रीवेङ्कटाचलस्योपरि घोणतीर्थसमीपे पतितवान्। तत्र मुनिवर्यैः तुम्बुरः...
पूज्याः! श्रीवेङ्कटाचलः। एषः श्रीवेङ्कटाचलः। श्रीहरिनित्यनिवासः।
तुम्बुरः मुनीनां कृते पूर्ववृत्तान्तं सर्वं श्रावितवान्।
अत्र पतनं त्वत् पूर्वपुण्यवशाद् एव
मुनिवर्याः। मम कर्तव्यं किमिति बोधयन्तु।


आम्। भवद्भिः यदुक्तं तत् सत्यमेव।
गन्धर्व! पुरतः विद्यमानेऽस्मिन् घोणतीर्थे प्रतिदिनं स्नानं कृत्वा कठोरदीक्षया श्रीवेङ्कटेश्वरम् उद्दिश्य तपः आचर।
कियत् कालपर्यन्तं तपः करणीयः?
एकवर्षपर्यन्तम् अस्मिन् तीर्थतीरे एव तपः करोतु। श्रीवेङ्कटेश्वरः अवश्यम् अनुग्रहिष्यति।
पापपरिहारार्थं भवन्तः यथाज्ञापयन्ति तथैव करोमि। कृतज्ञोऽहम्।

तुम्बुरस्य कठोरतपः दृष्ट्वा सन्तुष्टः श्रीवेङ्कटेश्वरः प्रत्यक्षो अभूत्। तदा तुम्बुरः तं वेङ्कटेश्वरं कीर्तयन् मधुरगानं कृतवान्।




आगामि सञ्चिकायां ....
श्रीवेङ्कटेश्वरस्य अन्यद्दिव्यलीलाविलासं दृष्ट्वा ... तराम...
स्वस्ति।

# गुरूपदेशेन किम् असाध्यम्

- अंगद्.पि.एस्.




प्राचीनकाले यदा वाहनानि नासन् तदा सर्वेषां प्रवासः पद्भ्यामेव आसीत्। तत्काले चत्वारः युवकाः एकस्मात् ग्रामात् अन्यं ग्रामं प्रति गच्छन्तः आसन्। किन्तु किञ्चित् दूरादनन्तरं एकस्य वनस्य समीपे प्राप्तवन्तः। तत्र किञ्चित्कालं स्थित्वा चिन्तितवन्तः - ''वयं कथमेतस्मिन् वने सञ्चरामः? कथम् मार्गम् अन्विष्यामः?''। एकः युवकः धैर्येण उक्तवान् - ''अहं गच्छामि, यत्किमपि भवतु, अहं सिद्धः अस्मि'' इत्युक्त्वा सः वनं प्रविष्टवान्।

द्वितीयः उक्तवान् ''अत्रैव भूत्वा न किमपि प्रयोजनं, अतः अहमपि गच्छामि'' इति कथयन् अन्यं मार्गमन्विष्य वनं प्रविष्टवान्।

तदा तृतीयः अपि ''यत्किमपि भविष्यति चेद् तदा पश्यामि'' इत्युक्त्वा वनं प्रविष्टवान्। चतुर्थः युवकः उपायम् अन्विष्यन् तत्रैव किञ्चित्कालं स्थितवान्। तदा तद्ग्रामीणः कश्चित् वृद्धः तन्मार्गे आगतवान्। सः युवकः तं वृद्धं प्रति वनस्य विषये पृच्छति, मार्गः कुत्र भवति इति पृच्छति, वन्यमृगाः आगच्छन्ति चेत् किं करणीयमिति च पृच्छति। तस्मात् वृद्धजनात् सर्वं ज्ञात्वा तं नमस्कृत्य धन्यवादमुक्त्वा वनं प्रविशति।

सः युवकः अनायासेन साहसिकतया च तत् घोरवनम् अतिक्रम्य लक्ष्यस्थानं प्राप्नोति । किन्तु वने प्रविष्टानाम् अन्येषां त्रयाणां वार्तां एव न श्रुतवान्। ते मार्गभ्रष्टाः वा अथवा मृगेण पीडिताः वा इति अपि न ज्ञातवान्।

कदाचित्, कश्चित् पुरुषः गुरुतुल्यः भवति, अथवा किञ्चित् वस्तु गुरुतुल्यं भवति, एवं कश्चित् सन्दर्भः गुरुतुल्यः भवति। **''कथञ्चित् भवतु''** इति त्रयाणां युवकानां मार्गं स्वीकरोति चेत् लक्ष्यप्राप्तिः सुलभा न। अतः यः सविनयं युक्तिपूर्वकचिन्तनेन गुरूपदेशानुसारं जीवति सः अनायासेन जीवनलक्ष्यं प्राप्नोति इति चतुर्थयुवकस्य व्यवहारः अपि सर्वेषां कृते गुरुरेव।



# विशिष्ट बालकः

जनार्दनन् रम्याजनार्दन् दम्पत्योः पुत्रः श्रीचरणः। चेन्नै नगरे विद्यमाने मोड्रन् हैयर् सेकंडरी विद्यालये (नवीन-उच्चमाध्यमिक विद्यालये) चतुर्थकक्ष्यायां पठति। करोना काले अन्तर्जालमाध्यमेन अनेके कार्यक्रमाः प्रचलन्ति। अनेकाः संस्थाः छात्राणां कृते स्पर्धाः चालयन्ति। गृहनिर्बन्धसमये श्रीचरणः अनेकासु अन्तर्जालस्पर्धासु भागं गृहित्वा पञ्चदशपुरस्कारान् प्राप्तवान्। समयस्य सदुपयोगः कथं करणीयः इति अनेन बालकेन ज्ञायते।

**श्रीचरणेन प्राप्ताः पुरस्काराः**

श्री हयग्रीव कल्चरल् अकाडमी, काट्टुपक्कम् संस्थाया सञ्चालितायां कर्णाटकसङ्गीतस्पर्धायां श्रीचरणः प्रथमपुरस्कारं प्राप्तवान्। अनया संस्थया एव प्रचलितायां तमिलभाषणस्पर्धायां तृतीयपुरस्कारमपि श्रीचरणः प्राप्तवान्।

ए.डि. हान्डक्राफट्स् क्वारन्टैन् सूपर् हीरोस् संस्थया सञ्चालितायां भक्तिगीतगानस्पर्धायां प्रथमपुरस्कारं श्रीचरणः प्राप्तवान्। आदम्बाकं रोटरी क्लब् सञ्चालितायां वेङ्कटेशप्रपत्तिकण्ठपाठस्पर्धायां श्रीचरणेन प्रथमः पुरस्कारः प्राप्तः संस्थया। लोटस् सोषल् वेल्फेर् चारिटबुल् ट्रस्ट् संस्थया प्रचलितायां स्वातन्त्रयदिनोत्सवदेशभक्तिगीतगानस्पर्धायां श्रीचरणः प्रथमपुरस्कारं प्राप्तवान्।

पर्पुल् विंगस् अकाडमी संस्थया सञ्चालितायां देशभक्तगीतगानस्पर्धायां श्रीचरणेन द्वितीयः पुरस्कारः प्राप्तः। आर्ट ड्रीम्स् एकस्प्रेस् स्टूडियो, चेन्नै संस्थया सञ्चालितायं साम्प्रदायिकभक्तिगीतगानस्पर्धायां श्रीचरणः प्रथमपुरस्कारं प्राप्तवान्।

आल्फा डान्स् स्टूडियो, नंदनम् संस्थाया प्रचालितायं भजनगीतस्पर्धायां श्रीचरणेन द्वितीयपुरस्कारः प्राप्तः। स्मार्ट् सूपर् स्टार्स् २०२० - पदान्वेषणपदरञ्जनी-स्पर्धायां प्रथमपुरस्कारं, गोकुलाष्टमी गीतगानस्पर्धायां प्रथमपुरस्कारञ्च श्रीचरणः प्राप्तवान्। कलाश्रयमञ्च् सङ्गीत अकाडमी संस्थायां प्रचालितायां जन्माष्टमीगीतगानस्पर्धायां श्रीचरणः तृतीयपुरस्कारं प्राप्तवान्।

वालियन्ट् अकाडमी संस्थया सञ्चालितायां कृष्णजयन्तिगीतगानस्पर्धायां श्रीचरणेन प्रथमपुरस्कारः प्राप्तः। ट्विन्किलिंग् स्टार् किड्स् संस्थया प्रचालितायां जन्मष्टमीगीतागानस्पर्धायां श्रीचरणः प्रथमपुरस्कार प्राप्तवान्। एक्सक्टि

सोल्यूषन्, नुंगंबाकम्, चेन्नै संस्थया स्वगानप्रतिभाप्रदर्शनकारणेन श्रीचरणः अद्भुतगायकपुरस्कार (स्टन्निग् वोकलिस्ट् अवार्ड्) प्राप्तवान्। डाल्फिन् अकाडमी संस्थया सञ्चालितायां भगवद्गीताकण्ठपाठस्यर्धायां श्रीचरणः उत्तमप्रदर्शकपुरस्कारं प्राप्तवान्। एतस्य विशिष्टबालकस्य उपरि भगवतः श्रीनिवासस्य अनुकम्पा सर्वदा भवतु इति प्रार्थयामः।

# रसप्रश्नाः

- विष्णुचित्तन् राघवन्

१. भगवतः श्रीनिवासस्य घन्टावतारः कः ?

अ. विष्णुचित्तः — आ. कुलशेखरः

इ. वेदान्तदेशिकः — ई. रामानुजः

२. कः भगवतः श्रीनिवासस्य कृते उद्यानवनं निर्मितवान्?

अ. वेङ्गमाम्बा — आ. कृष्णदेवरायः

इ. अन्नमाचार्यः — ई. अनन्ताल्वान्

३. कुत्र भगवतः श्रीनिवासस्य विवाहः जातः?

अ. तिरुमला — आ.नारायणवणम्

इ. अप्पलायगुण्टा — ई. श्रीनिवासमङ्गापुरम्

४. कः भगवतः श्रीनिवासस्य कृते तिरुमलायां स्थलं दत्तवान्?

अ. आदिवराहस्वामी — आ. इन्द्रः

इ. ब्रह्मा — ई. आकाशराजः

५. कुतः भगवतः श्रीनिवासस्य कृते जलम् आनयन्ति?

अ. कुमारतीर्थः — आ. आकाशगङ्गात्

इ. पापविनाशतः — ई. पान्डवतीर्थतः

६. वेङ्कटेश्वरस्य सुप्रभातं कः रचितवान्?

अ. रामानुजः — आ. गरुडः

इ. प्रतिवाद भयङ्कर अन्नन् — ई. पुरिशै रङ्गाचार्यः

७. वेङ्कटेश्वरस्य नन्दकांशसम्भूतः कः?

अ. त्यागराजः — आ. रामदासः

इ. अन्नमाचार्यः — ई. मुतुस्वामिदीक्षितः

समाधानम् १.इ २.ई ३.आ ४.अ ५.आ ६.इ ७.इ

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।



तंदनान अहि - तंदनान पुरे
तंदनान भळा - तंदनान...

SAPTHAGIRI ( SANSKRIT ) ILLUSTRATED MONTHLY
Published by Tirumala Tirupati Devasthanams
printing on 25-08-2020.



विनरो भाग्यमु विष्णुकथ
वेनुबलमिदिवो विष्णुकथ...